हैं तो वहाँ सब प्राणियों के हाथ का बनाया हुआ भोजन करते हैं। साहू के घर जाते हैं वहाँ भी सबका बनाया भोजन करते हैं। कहिए इन दोनो जगह कौन सा सम्बन्ध है ? इन दोनों जगह बिना शास्त्रीय सम्बन्ध के भोजन करते हैं। यह कैसा अन्याय है ? अपने पूर्वज ऋषियों के सन्तान सरयूपारीणों का बनाया हुआ सरयूपारी न खायँ यह कितना बड़ा अन्याय और अधर्म है। हम लोग २६ छाब्बिस ऋषियों के सन्तान हैं तो २६ ऋषियों का परस्पर बनाया हुआ भोजन करने में क्या पाप है और कहाँ लिखा है ? देखिये एक यह अन्याय कि पाँच सौ घर सरयूपारीण एकता करके आपस में विवाहादि संबंध करके संगठित व्यवहार आपस का ठीक करके मनमानी अपनी इच्छानुसार पंक्तिपावन की पताका लेकर घूमने लगे। अन्य भाइयों को पंक्तिटूट या घरकर या धाकर या नीच इन शब्दों से पुकारने लगे। श्रौतस्मार्त्तकर्मपरायण वेदवेदाङ्गवक्ता भी ब्राह्मण हो जिसमें पंक्तिपावन के लक्षण यथार्थ में पाये जाते हों उसे भी मध्यम व नीच की दृष्टि से आज कल देखते हैं। कहते हैं कि ये पंक्तिटूट हैं। शास्त्र तो इनको पक्ति टूट नहीं कहता परन्तु जो संगठितरूप से आज कल अपनी प्रसिद्धि कर पंक्ति-पावनत्वेन सिक्का जमाये हुये हैं वे ही नीच पदवी से भाइयों का गला घोटते हैं। जातिरेका हि विप्राणां क्रिया तत्र गरीयसी। यत्र यत्र क्रिया श्रेष्ठा तत्र तत्र कुलीनता ॥

एक और भी अन्याय है—कहते हैं कि सरवार प्रान्त में रहनेवाले ब्राह्मण सरयूपारीण उत्तम हैं। और सरयू नदी के दक्षिण दूरस्थान में रहनेवाले ब्राह्मण मध्यम हैं। सरवार प्रान्त में कन्या, पुत्र का विवाह करने वाले ब्राह्मण सरयूपारीण उत्तम हैं। सरवार से बाहर रहनेवाले ब्राह्मणों के साथ विवाहादि करनेवाले सरयूपारीण ब्राह्मण मध्यम हैं इत्यादि। ऐसा कहने वालों को विचार करना चाहिये कि यदि उन्हीं ऋषियों के सन्तान होते हुये कलिकराल के दबाव से जीविकावश सरवार प्रान्त छोड़कर भारतवर्ष ही में बसे हैं, समुद्र के देशों में नहीं गये हैं तो वे कैसे मध्यम हो सकते हैं ? अपने सदाचार कुलाचार के अनुसार २६ छब्बिस गोत्रवाले सरयूपारीण सब बराबर दर्जे के हैं। उत्तम मध्यम की कल्पना करना भ्रममूलक है। यदि मनमाने ही उत्तम बनना है तो वेद, शास्त्र के पूर्ण जानने वाले श्रौतस्मार्त्तधर्मपरायण सदाचारी दो हजार चार हजार सरयूपारीण

आपस में संगठन, दृढ़ प्रतिज्ञा (खानपानादि विवाह के लिये उत्तम प्रीति हो करके) मनुस्मृति में जो पंक्तिपावनों के लक्षण मनुभगवान ने कहे हैं उनके यथाथ संघटित होने से हम लोग पंक्तिपावन नहीं बल्कि महापंक्तिपावन का झंडा लेकर अपने को पंक्तिपावन मानने वालों के ऊपर खूब दबाव डालें तो क्या यह हमलोगों का अन्याय नहीं होगा ?

वस्तुतः सरयूपारीण २६ गोत्रवाले जिस किसी में पंक्तिपावन का लक्षण घटे वही पंक्तिपावन है। मनमानी पंक्तिपावन कोई नहीं बन सकता। यदि कहिये कि हमारे पितामह प्रपितामह वृद्धप्रपितामह पंक्तिपावन के लक्षण से सम्पन्न थे, हम उन्हीं के कुल के हैं तो पंक्तिपावन क्यों नहीं कहे जायं तो ऐसा भी कहना शास्त्रविरुद्ध है। क्योंकि पंक्तिपावनों का सरयूपारीणों में कोई कुल नहीं है।

किन्तु मनुस्मृति के अनुसार जिन सरयूपारीण २६ गोत्र वालों में पंक्तिपावनों के लक्षण घटें उन्हीं को पंक्तिपावन कहते हैं।

आज कल बहुत से सरयूपारीणों से यदि कोई पूछता है कि आप कौन ब्राह्मण हैं तो बड़े जोर से चौंक झिझक कर वीरता का रस भर कर बोलते हैं कि "हम सोहगौरा के तिवारी अहीं जी, मामखोर के शुक्ल अहीं जी, पींड़ी के तिवारी अहीं जी, पिपरा के मिश्र अहीं जी" इतना कह कर बृहस्पति के चाचा बन बैठते हैं। विचार करना चाहिये कि सोहगौरा मामखोर पिपरा पींड़ी ये सब गाँव के नाम हैं। इन ग्रामों के रहने वाले यदि सर्वोपरि हों तो उन गाँवों के पशु पक्षी मिट्टी इत्यादि भी उत्तम कहे जा सकते हैं। डीह की प्रधानता इसलिये मान सकते हैं कि मामखोर इत्यादि गाँवों में हमारे पूर्वजों का जन्म था उसी की शाखा हम हैं। कोई पूछता है कि आप कहाँ के शुक्ल हैं? तो उत्तर देना चाहिये कि हम मामखोर, सोहगौरा गाँव के शुक्ल व तिवारी हैं। अर्थात् हमारे पूर्वजों का जन्म उसी गाँव में हुआ था। ग्रामों का नाम पिपरा, मामखोर, सोहगौरा। कोई वेद या धर्मशास्त्र नहीं है कि उस ग्राम के रहने वालों को उत्तम बना दे। किन्तु श्रुतिस्मृतिपुराणप्रतिपादित चिरन्तनसदाचार–उपासनाकाण्ड–कर्मकाण्ड–ज्ञानकाण्डोक्त वेदविहित-कर्मानुष्ठान करने वाला ही उत्तम सरयूपारीण ब्राह्मण है। अत एव २६ गोत्र वाले सब सरयूपारीण ब्राह्मणों का सब सरयूपारीणब्राह्मणों के साथ भोजन, विवाह का व्यवहार होना कुलाचारमर्यादा से विरुद्ध नहीं है। और शास्त्र का भी कोई विरोध नहीं है। इस विषय में जिसको कुछ

शंका उत्पन्न हो पत्रद्वारा या प्रत्यक्ष आकर हम से शास्त्रार्थ कर सकते हैं। शास्त्रार्थ करने के लिये हम स्पष्ट सूचना या घोषणा करते हैं। हम आशा करते हैं कि मेरे इस उद्दण्ड व सप्रमाण लेखको सरल हृदय से ग्रहण करके टूटे फूटे सब साधारण सरयूपारीण भाइयों को मालाकारवत् एक सूत्र में खानपान विवाहादि व्यवहार से बांधकर कल्पित उत्तम मध्यम व्यवहार को छोड़ कर समान व पवित्र दृष्टि से छिटके भाइयों को मिलाने का प्रयत्न करेंगे। और पूर्वोक्त प्रमाणों से हमलोग किसी की शाखा उपशाखा नहीं है किन्तु स्वतन्त्र सरयूपारीण ब्राह्मण सृष्टि के समय से ही गर्ग वशिष्ठादि ऋषियों की सन्तान हैं।

ब्राह्मणोत्पत्ति-मार्त्तण्ड नामक ग्रन्थ में जो सरयूपारीणोत्पत्ति लिखी है वह बिलकुल प्रमाणशून्य मिथ्या है, किसी पुराणादि में लिखी नहीं है तथा अन्धगोलाङ्गूलन्यायेन "अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे" न्यायेन रायबहादुर डाक्टर देवदत्त चारपानि पाण्डेय सरयूपारीण ने जो वंशावली लिख के छपाई है वह भी उत्पत्त्यंश में बिलकुल प्रमाणशून्य होने से झूठी है। अतः भाइयों को विचार करना चाहिये कान्यकुब्जों की कल्पितलीला पर। यह भी पता चला है कि उक्त पाण्डेय जी कान्यकुब्जों के मित्र भी थे।

इस स्वतन्त्रता में इस पुस्तक को पढ़कर जिनको सन्देह हो वे इच्छानुसार हमसे शास्त्रार्थ कर सकते हैं। अभी तक सरयूपारीण ब्राह्मण वंशावली रायबहादुर देवदत्त पाण्डेय तथा और भी कई एक सज्जनों ने जो छपाई है सो अन्धपरम्परा से प्रमाणशून्य तथा झूठी है। अतः इस पुस्तक में जो प्रमाण व व्यवस्था है सब सत्य।

३—घर-गर्ग १ गौतम २ शांडिल्य ३ ( शुक्ल, मिश्र, तेवारी )

१३—घर-पाराशर १ गालव २ कश्यप ३ कौशिक ४ भार्गव ५ भरद्वाज सावर्ण्य ७ अत्रि ८ कात्यायन ९ अङ्गिरा १० वत्स ११ शांकृत्य १२ जमदग्नि १३

कौडिन्य १ वाशिष्ठ २ उपमन्यु ३ मौनस ४ कर्ण ५ वर्तंत ६ भृगु ७ अगस्त ८ कौसल्य ९ उद्बाह, १०

कृष्णात्रि, घृतकौशिक, गार्गेय, ये मिश्रित गोत्र हैं।

# गोत्रप्रवरविवेकः ।

आर्यजातीयसंस्कृतौ गोत्रप्रवरपरिज्ञानं नितान्तमहत्त्वपरिपूर्णमङ्गीकृतमास्ते। सनातनधर्मावलम्बिन्या आर्यजातेः संरक्षणकृते निर्धारितेषु चतुर्ष्वपि दुर्गेषु प्रथमं गोत्रप्रवरपरिज्ञानमेवास्ति, येन स्वस्वकुलपरम्परापवित्रतायाः संरक्षणं क्रियते। द्वितीयं किल रजोवीर्यशुद्धिमूलकं वर्णव्यवस्थापनमवगन्तव्यम्, यत्र जन्मना वर्णनिर्धारणव्यवस्था स्वीकृता, तपःस्वाध्यायनिरतानां वेदशास्त्रतत्त्वमर्मज्ञानां तत्रभवतां भूसुराणां नेतृत्वेन समाजसञ्चालनपद्धतिश्च निर्धारिता वर्त्तते। तृतीयमाश्रमधर्मव्यवस्थापनमवधेयम्, येन हिन्दुजातिरियं सुव्यवस्थितरूपेण धर्ममूलकं प्रवृत्तिमार्गमाश्रयन्ती निवृत्तिमार्गस्य परां काष्ठां प्राप्य परमानन्दमनुभवति। चतुर्थं किल सतीत्वमूलकनारीधर्मसाहाय्येन हिन्दुजातिपवित्रतापरिरक्षणम्। आर्यजातिरक्षकेषु चतुर्ष्वपि दुर्गेषु गोत्रप्रवरविज्ञानं नाम प्रथमं दुर्गं कीदृशमावश्यकमिति नूनं विवेचनीयमवगम्यते। सम्प्रति तत्प्रकाशनमप्यत्यावश्यकं प्रतिभाति।

गोत्रप्रवरमाहात्म्यमजानन्तो राजनीतिज्ञमानिनः केचन पुरुषपुङ्गवाः प्रजावर्गं विपथीकुर्वन्तो विलोक्यन्ते। अज्ञानान्धतमसे निमग्नाश्च ते प्रवरान् विस्मरन्तः समोत्रविवाहमपि विधानद्वारा परिचालयितुमिच्छन्ति। महायुगमन्वन्तरादीनां का कथा, कल्पमहाकल्पादिसृष्टिप्रारम्भत एव गोत्रप्रवरसम्बन्धेनेयमार्यजातिः सुसम्बद्धा विद्यते। ब्रह्मणः समुत्पत्तिसमयानन्तरं तदीयमानसपुत्ररूपतः प्रादुर्भूतेभ्य ऋषिभ्य एव गोत्रप्रवरविचार आर्यजातिषु प्रवर्त्तमानो निभाल्यते। गोत्रप्रवरमाहात्म्येनैव हिन्दुजातिरियं सृष्टिकालत इदानीं यावत् स्वरूपे तिष्ठन्ती जीवति। तत्कालादिदानीं यावत् संख्यातीता जातयः समुत्पद्यमाना गोत्रप्रवरसम्बन्धशून्याः कालकवलिता अभूवन्। दैवेषु जगत्सु विश्वासं कुर्वन्त्याः, वर्णाश्रमशृङ्खलया सुरक्षितायाः, गोत्रप्रवरपवित्रपरिपाटीमङ्गीकुर्वन्त्याः, सनातनधर्मावलम्बिन्या आर्यजातेरस्तित्वरक्षणं दैवाधीनमवधेयम्। यत्र मनुष्यजातौ वर्णाश्रमबन्धसम्बन्धो गोत्रप्रवरव्यवस्था च नास्ति, न तत्र नित्यपितॄणामर्यमादीनामनुकम्पा भवितुमर्हति, न च तया बिना कापि जातिश्चिरं जीवितुं शक्नोति। वेदेषु, वैदिककल्पसूत्रेषु, स्मृतिषु, पुराणेषु चापि गोत्रप्रवरप्रवर्त्तकमहर्षीणां वंशपरम्पराया निर्देशो निभाल्यते। गोत्रप्रवरमर्यादयैव हिन्दुजातिश्चिराय सुरक्षिता तिष्ठति।

धर्मशास्त्रेषु गोत्रप्रवरविज्ञानस्य प्रयोजनीयत्वं प्रायशः सर्वत्रैव प्रतिपादितं दृश्यते। समानगोत्रेषु समानप्रवरेषु च समान एव रक्तप्रवाहो विज्ञायते। यत्र कुत्रापि निवसत्सु समानार्षगोत्रसमुत्पन्नेषु द्विजश्रेष्ठेषु एक एव रक्तप्रवाह इत्यत्र नाऽणीयानपि संशीतिलशः। सुतरां धर्मकार्येषु विवाहादिषु च गोत्रप्रवरविज्ञानमत्यावश्यकमिति सर्व एव धर्मशास्त्रप्रवर्त्तका महर्षयः समामनन्ति। तथाहि भगवानापस्तम्बः—

धर्माधिकारः सर्वेषां गोत्रप्रवरहेतुकः।
विवाहश्चेति मन्वानः प्रवरानाह सूत्रकृत्॥
गोत्रप्रवरविज्ञानं स्वधर्मफललिप्सुभिः।
सम्पाद्यमाहुर्धर्मज्ञाः प्रत्यवायजिघांसया॥ इति।

भगवान् शातातपोऽपि—

आदौ गोत्रविशुद्धिः स्यात् ततः सप्तमपञ्चमम्।
राशिकूटं ततश्चैव त्रेधा सम्बन्धलक्षणम्॥ इति।

गोत्रविशुद्धिरसमानगोत्रत्वेन भवति। गोत्रमिति प्रवरस्याप्युपलक्षणं विज्ञातव्यम्। "ब्रह्मचारी वेदानधीत्य उपहृत्य गुरोरनुज्ञातो दारान् कुर्वीत असगोत्रान् मातुरसपिण्डान् नग्निका तु श्रेष्ठा।" इति गोभिलगृह्यसूत्रम्। अनागतार्त्तवा नग्निका प्रोच्यते। मनुस्मृतावपि—

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥ इति।

योगी याज्ञवल्क्योऽपि—

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा॥ इति।

महर्षिर्व्यासोऽपि—

स्नात्वा समुद्वहेत् कन्यां सवर्णां लक्षणान्विताम्।
यवीयसीं भ्रातृमतीमसगोत्रां प्रयत्नतः॥ इति।

विष्णुधर्मोत्तरेऽपि—

नैकगोत्रां च वरयेन्नैकार्षेयां च भार्गव।
पितृतः सप्तमादूर्ध्वं मातृतः पञ्चमात्तथा॥
वरयेल्लक्षणोपेतां सदा लोकद्वयेच्छया॥ इति।

गृहस्थः सदृशीं भार्यां विन्देत अनन्यपूर्वां यवीयसीम्, असमानप्रवरैर्विवाहः, ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः

पञ्चमादिति" महर्षिगौतमः। यवीयसीं—वरस्यावस्थातः शरीरप्रमाणतश्च लघ्वीमित्यर्थः। विस्तरभयात्प्रमाणान्तराणि नोपस्थाप्यन्ते।

विवाहो नाम संस्कारविशेषजनिता क्रिया, तया च देवर्षिपितृसंवर्धनं हिन्दुजातिलक्ष्यभूतमनुष्ठीयते। न च सगोत्रायां वैवाहिको धार्मिकः संस्कारः समुत्पद्यते श्रुतिस्मृतिविरोधात्। ज्ञानतोऽज्ञानतोपि वा सगोत्रायाः समानप्रवरायाश्च परिणयने को दोष इत्यधो निर्दिश्यते। तथाहि भगवानापस्तम्बः:—

परिणीय सगोत्रां तु समानप्रवरां तथा।
कृत्वा तस्याः समुत्सर्गं पालयेज्जननीमिव ॥ इति।

महर्षिः शातातपोऽपि —

समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च।
तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते ॥
कामाद् विवाहमात्रे वा प्रजाऽनुत्पादनेऽपि वा।
तस्य चाण्डालवासः स्याद् व्रतं प्राणान्तिकं चरेत् ॥ इति।

मदनपारिजातेऽपि—

परिणीय सगोत्रां तु समानप्रवरां तथा।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत् ॥ इति।
सगोत्रप्रवरां ज्ञात्वा गच्छंस्तु गुरुतल्पगः।
तत्र चाण्डालमुत्पाद्य ब्राह्मण्यादेव हीयते ॥
सगोत्रायां प्रजां जातां चाण्डालेषु विनिक्षिपेत्।
गुरुतल्पव्रतं कृत्वा तां रक्षेज्जननीमिव ॥

इति त्रिकाण्डमण्डनः। स्मृत्यर्थसारेऽपि—

यदि कश्चिज्ज्ञानतस्तां कन्यामूढ्वोपगच्छति।
गुरुतल्पव्रताच्छुद्धिर्गर्भस्तज्जोऽन्त्यतां व्रजेत् ॥
भोगतस्तु परित्यज्य पालयेज्जननीमिव।
अज्ञानादैन्दवैः शुद्धिस्त्रिभिर्गर्भस्तु काश्यपः ॥ इति।

एवं हि चान्द्रायणातिकृच्छ्रप्रायश्चित्तं सगोत्रप्रवरायाः परिणयनमात्र एव, तदुपगमनापत्योत्पादनयोस्तु ब्राह्मण्यहानिरेवेत्यापस्तम्बः। त्यागश्चोपभोगधर्मकार्ययोर्नतु तस्या एव। अज्ञानतः सगोत्रादिषूत्पन्नानां जनकप्रायश्चित्तोत्तरं काश्यपगोत्रेण व्यवहारः कार्यो न तु त्यागः। ज्ञानतस्तु सगोत्रप्रवरायाम् उत्पन्नानां चाण्डालत्वमेव। तथाहि यमः—

आरूढपतितापत्यं ब्राह्मण्यां यस्तु शूद्रजः ।
सगोत्रोढासुतश्चैव चाण्डालास्त्रय ईरिताः ।। इति ।

समानगोत्रप्रवरया कन्यया विवाहं कृत्वा ब्राह्मणो गुरुतल्पगप्रायश्चित्तादिना शुध्यति । तादृशकन्यातः समुत्पन्ना सन्ततिश्चाण्डालतां गच्छति । अज्ञानतश्चेत्समानगोत्रप्रवरां कन्यां यदि कश्चिदुद्वहति, तस्यां च सन्तानमुत्पादयति, तर्हि विवाहकर्त्तु स्त्रिभिश्चान्द्रायणैः शुद्धिः सन्तानश्च काश्यपगोत्रीयः स्यात्, काश्यपगोत्रेणोपनेयो भवेत् "सर्वेयं काश्यपी प्रजे" ति निर्देशात् । सुतरां समानगोत्रप्रवरासु कन्यासु भार्यात्वमेव नोत्पद्यते, तथात्वे तु सर्वश्रौतस्मार्त्तकर्मसु तदधिकाराभावः, विवाहसंस्कारस्य वैयर्थ्यापत्तिश्चेति गोत्रप्रवरविवेकोऽयमभिनवमाधवप्रोक्तबोधायनमतमनुसृत्य बालानामपि सुखबोधाय प्रस्तूयते—

ब्राह्मवर्षमानेनैकस्य ब्रह्मणः शतवर्षात्मकमायुः, तद्धि महाकल्पमभिधीयते । ब्रह्मणो दिनमेकं कल्पम् इत्युच्यते । तत्र चतुर्दश मनवो व्यतिगच्छन्ति । श्वेतवाराहकल्पेऽत्र स्वायम्भुव-स्वारोचिषोत्तम-तामस-रैवत-चाक्षुषाख्याः षण्मनवो व्यतीताः । सम्प्रति वैवस्वतो मनुः । एकत्र कल्पे मनुसदृशा इन्द्रा अपि चतुर्दश भवन्ति । तेऽपि षडतीताः । अस्मिन् वैवस्वतमन्वन्तरे पुरन्दराभिधान इन्द्रो वर्त्तते । एकस्मिन् मन्वन्तरे परिवर्त्तमाने सर्वेऽपि देवा ऋषयः पितरश्च परिवर्त्तन्ते ।

अत्र मन्वन्तरे सप्तर्षिपदाधिष्ठिताः सप्त ऋषयोऽगस्तिश्चेत्यष्टौ गोत्रकृतः समाम्नाताः, विष्णुपुराणे तृतीयांशे प्रथमाध्याये वर्त्तमानमन्वन्तरीयसप्तर्षीणां नामानि प्रोक्तानि । तथाहि—

वशिष्ठः कश्यपोऽथाऽत्रिर्जमदग्निश्च गौतमः ।
विश्वामित्र-भरद्वाजौ सप्त सप्तर्षयोऽत्र तु ।। इति ।

श्रीमद्भागवतेऽष्टमस्कन्धे त्रयोदशाध्यायेऽपि—

कश्यपोऽत्रिर्वशिष्ठश्च विश्वामित्रश्च गौतमः ।
जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः ।। इति ।

वैवस्वतमन्वन्तरेऽत्र विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवशिष्ठकश्यपागस्तयो बौधायनादिभिर्गोत्रकृतः प्रकीर्त्तिताः । स्मृत्यर्थसारसंगृहीतः श्लोको यथा—

जमदग्निर्भरद्वाजो विश्वामित्रात्रिगोतमाः ।
वशिष्ठः कश्यपोऽगस्त्यो मुनयो गोत्रकारिणः ।। इति ।

भृगुरङ्गिराश्चेति द्वौ वशिष्ठकश्यपादिवद् गोत्रकृतौ नोक्तौ। तत्कारणम् मग्रे वक्ष्यते।

एतेषामगस्त्यष्टमानां मध्ये यस्यापत्यं ( सन्तानः ) ऋषित्वं ( मन्त्र-द्रष्टृत्वं ) भजते, तदपत्यं तस्य ऋषेर्गोत्रमिति बोधायनादिभिरभिहितम्।

सप्तानाम् ऋषीणामगस्त्यष्टमानां यदपत्य तद्गोत्रमित्याचक्षते" इत्याश्वलायनसूत्रेऽपि प्रमाणितम्। "अपत्यं पौत्रप्रभृतिगोत्रम्" इति पाणिनीयसूत्रमपि व्याचष्टे। माधवस्तु—

ऋषयो दश तेषां तु सन्ततावृषितां गताः।
यज्ञे प्रव्रीयमाणास्ते प्रवरा इति कीर्त्तिताः॥ इति।

सप्तर्षयोऽगस्तिश्चेत्यष्टौ गोत्रकृतो मुनयः, भृगुरङ्गिराश्चेति द्वौ मिलित्वा दश। एतेषां दशमुनीनां सन्ततिपरम्परायां ये समुत्पन्नास्ते च यज्ञे प्रव्रीयमाणाः प्रवरा इति बोधायनादिभिरङ्गीकृताः गोत्रभूतस्य ऋषेः पितृपितामहप्रपितामहादय एव प्रवराः, पित्रादीनामपि मन्त्रकृतामेव प्रवरत्वमिति प्रवरदर्पणकारः।

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात्॥

इति बोधायनमते ऊनपञ्चाशदेव प्रवराः सन्ति। तथाहि—शुद्धभृग वश्चत्वारः, जमदग्नयस्त्रयः, एते सप्त भृगुगणा भवन्ति। गौतमाः सप्त,—भरद्वाजास्त्रयः, शुद्धाङ्गिरसः सप्त, एते सप्तदश अङ्गिरोगणाः सन्ति। अत्रयश्चत्वारः, विश्वामित्रा दश, कश्यपास्त्रयः, वशिष्ठाश्चत्वारः, अगस्त-यश्चत्वारः। इत्यूनपञ्चाशत् प्रवराः कथिताः।

प्रवरे एको वा, द्वौ वा, त्रयो वा, पञ्च वा, ऋषयो भवन्ति। न चत्वारो न षडाद्या भवन्ति। "एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीते" इति श्रुतौ नियमितत्वात्। भृगुगणे यास्कस्य, विदस्य, आर्ष्टिषेणस्येति त्रयाणां पञ्चार्षेयप्रवरः। अङ्गिरोगणे कौमण्डस्य, दीर्घतमसः, काक्षायणस्य, गर्गस्येति चतुर्णां पञ्चार्षेयप्रवरः। गर्गस्य त्र्यार्षेयप्रवरोऽपि भवति। विश्वामित्रगणे पूरणाख्यस्य द्व्यार्षे-यप्रवरः। शुनकानां वशिष्ठानां च एकार्षेयप्रवरः। इतरेषां त्र्यार्षेयप्रवर इति संक्षेपः।

एक एव ऋषिर्यावत् प्रवरेष्वनुवर्त्तते।
तावत्समानगोत्रत्वम् ऋते भृग्वङ्गिरोगणात्॥

इति बोधायनः।

अस्य भावार्थः—आङ्गिरसो भृगोश्चान्यत्र, भृग्वङ्गिरोगणौ विहायेत्यर्थः, इतरेषु प्रवरेषु एक ऋषिर्यावद् वर्त्तते तावत्समानगोत्रत्वं भवति। भरद्वाजो जमदग्निरत्रिर्विश्वामित्रो वशिष्ठःकश्यपोऽगस्त्यश्चेत्यष्टौ गोत्रकर्त्तारः, भृगुरङ्गिराश्चापि द्वौ गोत्रकर्त्तृवदवगन्तव्यौ। एवं दश गोत्रहेतवः समाम्नाताः। तत्र शुद्धभृगुगणं शुद्धाङ्गिरसं च विहायेतरेष्वष्टसु गणेषु एकऋष्यनुवर्त्तने समानगोत्रत्वम्। भृग्वङ्गिरोगणयोस्तु एकऋष्यनुवर्तनेऽपि न समानगोत्रत्वम्। यथाजमदग्निप्रवरे च भृगुरनुवर्त्तते, तथापि जमदग्नेः शुद्धभृगूणां च न समानप्रवरत्वम्, भृगोर्गोत्रकर्त्तृत्वाभावात्। एवं गौतमप्रवरेषु शुद्धाङ्गिरोगणेषु च अङ्गिरोऽनुवर्त्तनेऽपि गौतमानां भरद्वाजानां शुद्धाङ्गिरसां च मिथो विवाहोऽस्ति, अङ्गिरसो गोत्रकर्त्तृत्वाभावादिति। अपिच माधवीये—

> द्व्यार्षेयसन्निपाते तु त्र्यार्षेयाणां करग्रहः।
> त्र्यार्षेयसन्निपाते तु पञ्चार्षेयकरग्रहः।
> भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत॥ इति।

अस्य तात्पर्यार्थो यथा—भृग्वङ्गिरोगणेषु वधूवरयोस्त्र्यार्षेयप्रवरयोर्मध्ये द्वौ ऋषी यदि समानौ स्यातां तदा न विवाहः। पञ्चार्षेयप्रवरयोर्मध्ये त्र्यार्षेयसन्निपाते न विवाहः। भृग्वङ्गिरोगणेषु वधूवरप्रवरयोरर्धाधिकऋषिसाम्ये न करग्रह इत्यर्थः। सुतरां त्र्यार्षेयप्रवरसन्निपाते ऋषिद्वयसाम्ये न करग्रहः, पञ्चार्षेयसन्निपाते प्रवरस्थऋषित्रयसाम्येऽपि न करग्रहः। फलतः एकस्य पञ्चार्षेयत्वे त्र्यार्षेयत्वे च प्रवरस्थऋषीणाम् अर्धाधिकसाम्ये न विवाहः। अयं नियमो भृग्वङ्गिरोगणेषु बोद्धव्यः, इतरत्र एकऋषिसाम्येऽपि न करग्रह इत्यर्थः। एतत्सिद्धान्तसमर्थकं प्रमाणं माधवीये स्मृत्यन्तरेऽपि। तथाहि—

> पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः।
> भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत्॥ इति।

बोधायनप्रदर्शिताः पूर्वोक्ताः के त ऊनपञ्चाशत् प्रवरा इति निर्णीयते, तथाहि—यास्काः, मित्रयवः वैनाः, शुनकाश्चेति चत्वारः शुद्धभृगवः सन्ति। यास्क-मौन-मौक-बाधूल-संकृतीनां भार्गववैतहव्यसावेदसेति त्र्यार्षेयप्रवरः। वैनानां भार्गव-वैनपार्थेति त्र्यार्षेयप्रवरः। शुनकानां शौनकेति वा गार्त्समदेति वा एकार्षेयप्रवरः। भृगोर्गोत्रकर्त्तृत्वाभावाद् यास्कादिषु त्रिषु प्रवरेषु भृगोरनुवर्त्तनेऽपि न समानगोत्रता, त्र्यार्षेयेषु

त्रिषु प्रवरेषु ऋषिद्वयानुवर्त्तनाभावात् समानप्रवरताऽपि नास्ति। शुनकानां यास्कादिभिस्त्रिभिर्न समानगोत्रता। अतो यास्कादीनां चतुर्णां गणानां विहाय स्वं स्वं गणमितरैस्त्रिभिर्विवाहो भवितुमर्हति। अत्र स्मृत्यर्थसार-वचनं यथा—

यास्का मित्रयवो वैन्याः शुनकाः प्रवरैक्यतः।
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परस्परम्॥ इति।

वत्सा विदा अर्ष्टिषेणा इत्येते त्रयो जामदग्न्याः सन्ति। मार्कण्डे-यमाण्डव्यदार्भायणपौलस्त्यकाशकृत्स्नपाणिनिवाल्मीकिरजतवाहप्रभृतयो वत्साः। तेषां भार्गवच्यावनाप्नवानौर्वजामदग्न्येति पञ्चार्षेयप्रवरा भवन्ति। विदप्रभृतीनां भार्गवच्यावनाप्नवानौर्ववैदेति पञ्चार्षेयप्रवराः। आर्ष्टिषेण-प्रभृतीनां भार्गवच्यावनाप्नवानार्ष्टिषेणेति पञ्चार्षेयप्रवरा भवन्ति। एषु प्रवरेषु भार्गवच्यावनाप्नवानेति ऋषित्रयसाम्येन "त्र्यार्षेयसन्निपाताञ्च पञ्चार्षेयकरग्रहः" इतिन्यायात् वत्सविदार्ष्टिषेणानां त्रयाणां परस्परम-विवाहः। एतेषां स्वस्वगणैरितरगणाभ्यां च न विवाहः। एतेषां त्रयाणां पूर्वोक्तानां चतुर्णां भृगुगणानां च न समानप्रवरत्वं भृगोर्गोत्रकर्तृत्वा-भावात्। इत्थं सप्त भृगवो व्याख्याताः।

इदानीं भृगुगणविवेचनानन्तरम् अङ्गिरोगणाः कथ्यन्ते। तत्र गौतमाः सप्तविधाः—आयास्याः, शरद्वन्तः, कौमण्डाः, दीर्घतमसः, करेणुपालयः, वामदेवाः, औशनसाश्चेति। तत्रायास्यगौतमानाम् आङ्गिरसायास्य-गौतमेति त्र्यार्षेयप्रवरः। शरद्वतगौतमानाम् आङ्गिरसशारद्वन्तगौतमेति त्र्यार्षेयप्रवरः। कुमण्डगौतमानाम् आङ्गिरसौचिथ्यकाक्षीवतगौतमकौम-ण्डेति पञ्चार्षेयः प्रवरः। दीघतमागौतमानाम् आङ्गिरसौचिथ्यकाक्षीवात-गौतमदैर्घतमसेति पञ्चार्षेयप्रवरः। कारेणुपालगौतमानाम् आङ्गिरस-गौतमकारेणुपालेति त्र्यार्षेयप्रवरः। वामदेवगौतमानाम् आङ्गिरसवाम-देवगौतमेति त्र्यार्षेयप्रवरः। औशनसगौतमानाम् आङ्गिरसौशनस-गौतमेति त्र्यार्षेयः प्रवरः। एषु सप्तसु प्रवरेषु गोत्रकर्त्तुर्गौतमस्यानुवृत्तेः "एक एव ऋषिर्यावत् प्रवरेष्वनुवर्त्तते तावत् समानगोत्रत्वम्" इति परिभाषया सप्तानामपि समानगोत्रत्वम्। अत एषां सप्तानामपि परस्परम-विवाह इति। अथ भारद्वाजास्त्रयः—शुङ्गाः, गर्गाः, रौक्षायणाश्चेति। शुङ्गानाम् आङ्गिरसबार्हस्पत्यभारद्वाजेति त्र्यार्षेयप्रवरः। गर्गाणाम् आङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति पञ्चार्षेयो वा, आङ्गिरसगार्ग्य-

शैन्येति वा, आपस्तम्बमते भारद्वाजगार्ग्यशैन्येति वा त्र्यार्षेयोऽपि वा प्रवरः। रौक्षायणानाम् आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति पञ्चार्षेयः प्रवरः। एषु त्रिष्वपि गोत्रकर्त्तुर्भरद्वाजस्यानुवर्त्तनात् "एक एव ऋषिर्यावत्" इति परिभाषया त्रयाणामप्येतेषां समानगोत्रत्वादविवाहः। अन्यच्च—भरद्वाजगोत्रोत्पन्नेन शुङ्गाख्येन मुनिना विश्वामित्रगोत्रोद्भवस्य कतमुनिसुतस्य शैशिराख्यस्य मुनेर्भार्यायां तन्नियोगेनोत्पादितः शुङ्गस्य शैशिरेश्च सुतत्वाद् द्व्यामुष्यायणत्वेन शौङ्गशैशिरिरिति संज्ञामलभत। अयं शौङ्गशैशिरिः भरद्वाजविश्वामित्रयोः सन्तानत्वाद् द्विगोत्रो भवति। अतः शौङ्गशैशिरिजातानां विश्वामित्रैर्भरद्वाजैश्च न विवाहः। मतान्तर-श्लोकोऽप्यालोच्यते। तथा हि—

भारद्वाजाश्च कपयो गर्गा रौक्षायणा इति।
चत्वारोऽपि भरद्वाजा गोत्रैक्यान्नान्वयुर्मिथः॥ इति।

अस्मिन् अर्थे दीपिकायां—

कपी प्रसिद्धावुदिताविह द्वौ
स्वतन्त्र एकस्त्वपरोऽस्वतन्त्रः।
तत्र स्वतन्त्रस्य कपेर्विवाहं
मिथो भरद्वाजकुलस्य चाहुः॥ इति।

अस्वतन्त्रकपीनाम् भरद्वाजगर्गरौक्षायणैः सह न विवाहः। स्वतन्त्र-कपिगणस्य तु भवत्येवेति। अथ शुद्धाङ्गिरोगणाः सप्त—विष्णुवृद्धाः, कण्वाः, रथीतराः, हरिताः, मुद्गलाः, संकृतयः, कपय इति। तत्र विष्णु-वृद्धगणस्य आङ्गिरसत्रासदस्यपौरुकुत्सेति त्र्यार्षेयप्रवरः। कण्वगणस्य आङ्गिरसाजमीढकाण्वेति त्र्यार्षेयप्रवरः। रथीतरगणस्य आङ्गिरसवैरूप-रथीतरेति वा, आङ्गिरसवैरूपपार्षदश्चेति वा त्र्यार्षेयः प्रवरः। हरित-गणस्य आङ्गिरसाम्बरीषयौवनाश्वेति त्र्यार्षेयः प्रवरः। मुद्गलगणस्य आङ्गिरसभार्म्यश्वमौद्गल्येति त्र्यार्षेयः प्रवरः। संस्कृतिगणस्य आङ्गि-रससाङ्कृत्यगौरिवीतेति त्र्यार्षेयः प्रवरः। स्वतन्त्रकपिगणस्य आङ्गि-रसामहीयोरुक्षय्येति त्र्यार्षेयः प्रवरः। तत्र विष्णुवृद्धकण्वरथीतरहरित-मुद्गलानां पञ्चानां स्वतन्त्रकपिगणस्य च स्वं स्वं गणं हित्वा इतरैः सह विवाहोऽस्ति। संकृतयो द्व्यामुष्यायणाः, कश्यपाः वसिष्ठाश्च। अतः संकृतीनां कश्यपैर्वसिष्ठैश्च विवाहो निषिद्धः। एवं हि गौतमगणाः सप्त, भरद्वाजगणास्त्रयः, शुद्धाङ्गिरोगणाः सप्तेति सप्तदशाङ्गिरसः सम्यग्विवे-चिताः। अथ चत्वारोऽत्रयो निरूप्यन्ते—अत्रिः, गविष्ठिरः, वाद्भूतकः,

मुद्गलश्चेति । तत्रात्रीणाम् आत्रेयार्चनानसश्यावाश्वेति त्र्यार्षेयः प्रवरः। गविष्ठिराणाम् आत्रेयार्चनानसगाविष्ठिरेति त्र्यार्षेयः प्रवरः। बाहूदकानाम् आत्रेयार्चनानसबाहूदकेति त्र्यार्षेयः प्रवरः । मुद्गलानाम् आत्रेयार्चनानसपौर्वातिथेति त्र्यार्षेयः प्रवरः। एषु चतुर्षु अत्रेरनुवर्त्तनात् "एक एव ऋषिर्यावत्" इति परिभाषया सगोत्रत्वान्न विवाहः। वैश्वामित्रबीजादात्रेयक्षेत्र उत्पन्नत्वाद् धनञ्जयः शौङ्गशैशिरिवद् द्विगोत्रो भवति। अतस्तस्य सन्ततेश्च विश्वामित्रैरत्रिभिश्च न विवाहः। अथ च—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥

इति नियमपूर्वकं दत्तायामत्रिगोत्रकन्यायां वैश्वामित्रबीजादुत्पन्नत्वाद् वालरथ्यादयो द्व्यामुष्यायणाः। तेषामपि विश्वामित्रैरत्रिभिश्च नान्वयः। एवं जातूकर्ण्याश्च द्व्यामुष्यायणत्वाद् वसिष्ठैरत्रिभिश्च नोद्वाह्याः इति। अथ दश विश्वामित्राः कथ्यन्ते—कुशिकाः, रौहिताः, रौक्थकाः, कामकायनाः, अजाः, धनञ्जयाः, कताः, इन्द्रकौशिकाः, अघमर्षणाः, पूरणाश्चेति। तत्र कुशिकानां वैश्वामित्रदैवरातौदलेति त्र्यार्षेयः प्रवरः। रौहितानां वैश्वामित्राष्टकरौहितेति त्र्यार्षेयः प्रवरः। रौक्थकानां वैश्वामित्ररौक्थकरैवतकेति त्र्यार्षेयः प्रवरः। कामकायनानां वैश्वामित्रदैवश्रवसदैवतरसेति त्र्यार्षेयः प्रवरः। अजानां वैश्वामित्रमाधुच्छन्दसाजेति त्र्यार्षेयः प्रवरः। धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति त्र्यार्षेयः प्रवरः। कतानां वैश्वामित्रकात्याक्षीलेति त्र्यार्षेयः प्रवरः। इन्द्रकौशिकानां वैश्वामित्रैन्द्रकौशिकेति त्र्यार्षेयः प्रवरः। अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति त्र्यार्षेयः प्रवरः। पूरणानां वैश्वामित्रपौरणेति द्व्यार्षेयः प्रवरः। एषु दशसु प्रवरेषु गोत्रकर्त्तुर्विश्वामित्रस्यानुवर्त्तनात् 'एक एव ऋषिर्यावत्' इति परिभाषया सगोत्रत्वादविवाहः। अथात्र विशेषः कथ्यते—देवरातः पनसश्चेति द्वौ जामदग्न्यौ, विश्वामित्रेण पालितत्वाद् वैश्वामित्रौ चापि स्तः। अतस्तयोर्जामदग्न्यैर्विश्वामित्रैश्च न विवाहः। तौ विहाय विश्वामित्राणां जमदग्नीनां च मिथो विवाहः। तथा च धनञ्जयं वामरथ्यं विहाय विश्वामित्रगणस्य अत्रिगणस्य च मिथो विवाहः। धनञ्जयवामरथ्यादीनां विश्वामित्रैरत्रिभिश्च न विवाहः। मतादिकान् शौङ्गशैशिरीन् कपिलांश्च विहाय विश्वामित्राणां भरद्वाजानां च मिथो विवाह इष्टः। अथ कश्यपास्त्रिविधाः—निध्रुवाः, रेभाः, शण्डिलाश्चेति। निध्रुवाणां काश्यपा-

वत्सारनैध्रुवेति त्र्यार्षेयः प्रवरः। रेभाणां काश्यपावत्साररैभेति त्र्यार्षेयः प्रवरः। शण्डिलानां काश्यपावत्सारशाण्डिल्येति वा, काश्यपावत्सारासितेति वा शाण्डिल्यासितदैवलेति वा त्र्यार्षेयः प्रवरः! दैवलासितेति द्व्यार्षेयप्रवरोऽपि वा। एषां त्रयाणां गोत्रकर्त्तुः कश्यपस्यानुवृत्तेः 'एक एव ऋषिर्यावत्' इति परिभाषया समानगोत्रत्वान् मिथो नाऽन्वयः। शण्डिलगोत्रस्य चतुर्थे प्रवरे कश्यपानुवृत्त्यभावेऽपि शण्डिलगोत्रस्य पूर्वोक्तप्रवरत्रये कश्यपस्यानुवृत्तेर्विद्यमानत्वादनुवृत्तिरस्ति। अतस्त्रिविधानामपि कश्यपानां मिथो न विवाहः। अथात्र विशेष उच्यते, लौगाक्षिर्नाम कश्यपसन्तानो वसिष्ठेनोपनीतः अह्वर्वसिष्ठो रात्रौ कश्यपो जातः। उपनयनं द्वितीयं जन्म, तस्य दिवा विहितत्वात्, निषेकः प्रथमं जन्म, तस्य रात्रौ विहितत्वात्। अतो लौगाक्षिगणस्य कश्यपैर्वसिष्ठैश्च न विवाहः। लौगाक्षीणां द्व्यामुष्यायणत्वात् काश्यपावत्सारवासिष्ठेति वा वासिष्ठकाश्यपावत्सारेति वा त्र्यार्षेयः प्रवरः। भिन्नगोत्रे ह्युपनीतस्याऽह्रुपदेष्टू रात्रौ निषेक्तुरिति द्व्यामुष्यायणत्वम्। अत एव निध्रुवरेभशण्डिललौगाक्षीणां मिथो नान्वयः। तथा च प्रयोगपारिजाते ह्यापस्तम्बः—

कश्यपो रेभरैभौ च शण्डिलो देवलोऽसितः।
संस्कृतिः पूतिमाषश्चावत्सारो निध्रुवो दश।
गोत्राणि कश्यपगणाः, अन्योन्यं न कग्रहः।

अस्यार्थः—संस्कृतिपूतिमाषौ बोधायनसूत्रे शुद्धाङ्गिरोगणे कश्यपगणे च पठितौ। आपस्तम्बसूत्रे वसिष्ठगणे पठितौ। अतस्तयोश्शुद्धाङ्गिरोभिः कश्यपैर्वसिष्ठैश्च नान्वयः। लौगाक्षिगण आपस्तम्बे पठितः। तथाहि—

अनष्टयोऽराकुलयस्ततयो राजवारयः।
शैराश्च क्षीरजाश्चापि वाह्वस्तदनन्तरम्॥
तथा चाशुचयः प्रोक्तास्सरन्ध्रयो राजसेवकाः।
खापुलिङ्गाश्च लौगाक्षिस्तथैव शरदम्बराः॥
एते त्र्ययोदश प्रातर्वसिष्ठा निशि कश्यपाः।
गायत्रीयोनिसम्बन्धावङ्गीकृत्य प्रवर्त्तकाः॥
तेषां गोत्रद्वयं मुक्त्वा वसिष्ठं कश्यपं तथा।
सर्वत्रापि विवाहः स्यादिति वेदविदो विदुः॥

अस्यार्थः—त्रयोदशानामेतेषां गायत्रीसम्बन्धादह्वर्वसिष्ठत्वं, योनिसम्बन्धान्निशि कश्यपत्वम्। तेषां वसिष्ठैः कश्यपैश्च नान्वय इति। अथ वसिष्ठगणाः कथ्यन्ते—केवलवसिष्ठाः, कुण्डिनाः, उपमन्यवः, पराशराश्चेति।

तत्र केवलवसिष्ठानां वासिष्ठेत्येकार्षेयः प्रवरः। कुण्डिनानां वासिष्ठ-मैत्रावरुणकौण्डिन्येति त्र्यार्षेयः प्रवरः। उपमन्यूनां वासिष्ठेन्द्रप्रमदाभर-द्वसव्येति त्र्यार्षेयः प्रवरः। पराशराणां वासिष्ठशाक्त्यपराशर्येति त्र्यार्षेयः प्रवरः। एतेषां चतुर्णां गोत्रकर्त्तुर्वसिष्ठस्यानुवृत्तेः समानगोत्रत्वान्न मिथो विवाहः।

जातूकर्ण्यो विवाहात्पूर्वम् अत्रेः पुत्र्यां वसिष्ठवीर्योत्पन्नाः। कन्यकानां दानेनान्यगोत्रं, दानाभावे जनकगोत्रमेव। अतो जातूकर्ण्यः अत्रिगोत्रो वसिष्ठगोत्रश्चेति द्व्यामुष्यायणः, अतस्तत्सन्ततेस्तस्य च वसिष्ठैरत्रिभिश्च न विवाहः। अथेदानीं चत्वारोऽगस्तयो निरूप्यन्ते—इध्मवाहाः, शाम्भ-वाहाः सोमवाहाः, यज्ञवाहाश्चेति। तत्रेध्मवाहानाम् आगस्त्यदार्ढ्य-च्युतैध्मवाहेतित्र्यार्षेयः प्रवरः। शाम्भवाहानाम् आगस्त्यदार्ढ्यच्युत-शाम्भवाहेति त्र्यार्षेय प्रवरः। सोमवाहानाम् आगस्त्यदार्ढ्यच्युतसौम-वाहेति त्र्यार्षेयः प्रवरः। यज्ञवाहानाम् आगस्त्यदार्ढ्यच्युतयाज्ञवाहेति त्र्यार्षेयः प्रवरः। एषां चतुर्णां गोत्रकर्त्तुरगस्तेरनुवृत्तेः समानप्रवरत्वात्समान-मुनिभूयस्त्वाच्च न विवाहः इति। इत्थम् ऊनपञ्चाशत् प्रवरा बोधाय-नमतेन प्रदर्शिता अस्माभिः। एतेषां प्रत्येकस्यावान्तरगणविभागाः प्रवर-मञ्जरीप्रवरदर्पणादिषु द्रष्टव्याः। विस्तरभयान्नात्रास्माभिः प्रकाशिता इति। क्षत्रियाणां मनुगोत्रं, वैश्यानां च भालन्दनगोत्रमस्तीति निर्दिष्टम्। क्षत्रियवैश्यादीनां स्वस्वपुरोहितगोत्रप्रवरौ भवत इत्यपि व्यवस्थितम्। अयमेव द्वितीयपक्षो विज्ञानेश्वराद्यनुमतः। "स पुरोहितप्रवरस्त्वेवं न्यायेन" इत्यापस्तम्बोक्तेः। सर्वेषां क्षत्रियाणां मनुगोत्रत्वेन वैश्यानां भालन्दनगोत्रत्वेन च सगोत्रत्वाद् विवाहाप्रसङ्गः प्रसज्येत। तस्मात् क्षत्रियवैश्यादीनां पुरोहितगोत्रेणैव सगोत्रता सर्वसम्मता। अज्ञातगोत्राणां पुरोहितगोत्रम्, आचार्यगोत्रं वा विज्ञेयम्। यत्तु "गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमिष्यते" इति, तदाचार्यगोत्राज्ञाने श्राद्धादिविषयमवधेयम्।

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात्॥

इति बोधायनेन प्रवरगणे संख्या प्रोक्ता। किन्तु कात्यायनापस्तम्बा-श्वलायनबोधायनसत्याषाढलौगाक्षिप्रभृतिश्रौतसूत्राणां मत्स्यादिपुराणानां च समालोचनेन गोत्रप्रवराणां गणसंज्ञास्वरूपसंख्याक्रम–प्रवरत्रिकल्पादि-भिर्विसंवादो दृश्यते। अतोऽग्रेऽत्रास्मत्प्रकाशितां सर्वशास्त्रसम्मतां गोत्रप्रवरसूचीं निभाल्य विवाहादिधर्मकार्यनिर्णयोऽनुष्ठातव्य इति।

# आश्वलायनापस्तम्बबोधायनकात्यायनलौगाक्षिसत्याषाढमत्स्योक्ताः प्रवरदर्पणकारदर्शिताश्च गोत्रप्रवरर्षयः ।

गोत्राणामग्रे ग्रन्थप्रमाणविषये साङ्केतिकाक्षराणि लिखितानि तेषामाशयः निम्नभागे द्रष्टव्यः ।

| प्रमाणग्रन्थाः— | साङ्केतिकं— | प्रमाणग्रन्थाः— | साङ्केतिकं— |
|---|---|---|---|
| आश्वलायनः | आ. | लौगाक्षिः | लौ. |
| आपस्तम्बः | आप. | सत्याषाढ़ | स. |
| बोधायनः | बो. | मत्स्यः | म. |
| कात्यायनः | का. | | |

| संख्या | गोत्रषयः | | प्र०स० | प्रवरर्षयः | | |
|---|---|---|---|---|---|---|
| १ | अगस्तिः | आप. | १ | आगस्त्यः | | |
| २ | अगस्तिः | बो. | ३ | आगस्त्यः | दार्ढ्यच्युतः | ऐध्मवाहः |
| ३ | ,, | का. | ३ | आगस्त्यः | माहेन्द्रः | मायोभुवः |
| ४ | अगस्त्यः | म. | ३ | ,, | ,, | ,, |
| ५ | अघमर्षणः | बो. | ३ | वैश्वामित्रः | आघमर्षण | कौशिकः |
| ६ | अजः | का. लौ. | ३ | वैश्वामित्रः | माधुच्छन्दसः | आजः |

| संख्या | गोत्रर्षयः | | प्र० स० | प्रवरर्षयः |
|---|---|---|---|---|
| ७ | आजमीढ़ः | आप. | ३ | आङ्गिरसः आजमीढः काण्वः |
| ८ | अत्रिः | म. बो. | ३ | आत्रेयः आर्चनानसः श्यावाश्वः |
| ९ | अनूपः | का. लौ. | ५ | भार्गवः च्यावनः आप्नवानः आर्ष्टिषेणः :आनूपः |
| १० | अप्नवानः | म. | ५ | भार्गवः च्यावनः आप्नवानः और्वः जामदग्न्यः |
| ११ | अयास्यः | का. लौ. | ३ | आङ्गिरसः आयास्यः गौतमः |
| १२ | अरुणपराशरः | बो. म. | ३ | वासिष्ठः शाक्त्यः पाराशर्यः |
| १३ | आगस्त्यः | म. | ३ | आगस्त्यः दार्ढच्युतः ऐध्मवाहः |
| १४ | आत्रेयः | का. | ३ | आत्रेयः आर्चनानसः श्यावाश्वः |
| १५ | आपस्तम्बः | बो. म. | ३ | आङ्गिरसः बार्हस्पत्यः भारद्वाजः |
| १६ | आपस्तम्बिः | लौ. का. | ५ | भार्गवः च्यावनः आप्नवानः आर्ष्टिषेणः आनूपः |
| १७ | आयास्यः | बो. | ३ | आङ्गिरसः आयास्यः गौतमः |
| १८ | आर्ष्टिषेणः | बो. आप. म. | ५ | भार्गवः च्यावनः आप्नवानः आर्ष्टिषेणः आनूपः |
| १९ | आर्ष्टिषेणः | आप. | ३ | भार्गवः आर्ष्टिषेणः आनूपः |
| २० | आश्वलायनः | लौ. का. | ३ | भार्गवः वाध्यश्वः दैवोदासः |
| २१ | ,, | आप. | ३ | वासिष्ठः ऐन्द्रप्रमदः आभरद्वसव्यः |
| २२ | ,, | बो. | १ | वासिष्ठः |
| २३ | उच ( त ) थ्यः | म. | ३ | आङ्गिरसः औच ( त ) थ्यः औशिजः |

| संख्या | गोत्रर्षयः | | प्र० स० | प्रवरर्षयः | | |
|---|---|---|---|---|---|---|
| २४ | उच (त) थ्यः | आ. का. | ३ | आङ्गिरसः | औच ( त ) थ्यः | गौतमः |
| २५ | ,, | आ. | ५ | आङ्गिरसः औच (त) थ्यः गौतमः | | औशिजः काक्षीवतः |
| २६ | उद्वाहः | म. | ३ | वासिष्ठः | ऐन्द्रप्रमदः | आभरद्वसव्यः |
| २७ | उद्दालकः | म. | ३ | आत्रेयः | आर्चनानसः | श्यावाश्वः |
| २८ | उपमन्युः | बो. म. | ३ | वासिष्ठः | ऐन्द्रप्रमदः | आभरद्वसव्यः |
| २९ | और्वः | म. | ५ | भार्गवः च्यावनः | आप्नवानः | और्वः जामदग्न्यः |
| ३० | औशिजः | आप. | ३ | आङ्गिरसः | औशिजः | काक्षीवतः |
| ३१ | कण्वः | बो. का. लौ. | ३ | आङ्गिरसः | आजमीढः | काण्वः |
| ३२ | ,, | म. | ३ | आङ्गिरसः | आ ( सा ) महीयवः | औरुक्षयः |
| ३३ | ,, | आ. | ३ | आङ्गिरसः | घौरः | काण्वः |
| ३४ | काण्वः | म. | ३ | वासिष्ठः | ऐन्द्रप्रमदः | आभरद्वसव्यः |
| ३५ | कर्णः | म. | ३ | आङ्गिरसः वार्हस्पत्यः | भारद्वाजः वान्दनः | मातवचसः |
| ३६ | कर्दमः | म. | ३ | काश्यपः | आसितः | दैवलः |
| ३७ | कश्यपः | बो. आप. | ३ | काश्यपः आवत्सारः | नैध्रुवः | |
| ३८ | ,, | म. | ३ | काश्यपः आसितः | दैवलः | ( शाण्डिलः ) |
| ३९ | ,, | आ. | ३ | काश्यपः आवत्सारः | आसितः | |
| ४० | कश्यपिः | म. | ३ | भार्गवः | वैतहव्यः | सावेदासः |

| संख्या | गोत्रर्षयः | | प्र०सं० | प्रवर्षयः | | |
|---|---|---|---|---|---|---|
| ४१ | क्रतुः | म. | ३ | आगस्त्यः | माहेन्द्रः | मायोभुवः |
| ४२ | कात्यायनः | म. लौ. का. | ३ | आङ्गिरसः | आ ( सा ) महीयवः | औरुक्षयः |
| ४३ | ,, | आप, का. | ३ | वैश्वामित्रः | कात्यः | आक्षीलः |
| ४४ | ,, | बो. का. | ५ | भार्गवः च्यावनः | आप्नावानः आर्ष्टिषेणः | आनूपः |
| ४५ | ,, | आप. | ३ | भार्गवः | आर्ष्टिषेणः | आनूपः |
| ४६ | काविष्टिरः | बो. | ३ | आत्रेयः | आर्चनानसः | श्यावाश्वः |
| ४७ | कावेपावः | आप. | ३ | वैश्वामित्रः | दैवरातः | औदलः |
| ४८ | काश्यपिः | म. | ३ | भार्गवः | वैतहव्यः | रैवसः |
| ४९ | काश्यपेयः | म. | ३ | काश्यपः | आवत्सारः | नैध्रुवः |
| ५० | कुण्डिनः | बो. आ. | ३ | वासिष्ठः | मैत्रावरुणः | कौण्डिन्यः |
| ५१ | कुत्सः | आ. | ३ | आङ्गिरसः | आम्बरीषः | यौवनाश्वः |
| ५२ | ,, | आप. | ३ | आङ्गिरसः | मान्धात्रः | कौत्सः |
| ५३ | कुशिकः | बो. का. लौ. | ३ | वैश्वामित्रः | दैवरातः | औदलः |
| ५४ | ,, | आप. | ३ | वैश्वामित्रः | आघमर्षणः | कौशिकः |
| ५५ | कृष्णपराशरः | बो. म. | ३ | वासिष्ठः | शाक्त्यः | पाराशर्यः |
| ५६ | कृष्णात्रेयः | बो. | ३ | आत्रेयः | आर्चनानसः | श्यावाश्वः |
| ५७ | कौण्डिन्यः | बो. | ३ | आङ्गिरसः | बार्हस्पत्यः | भारद्वाजः |

| संख्या: | गोत्रर्षयः | | प्र०सं० | प्रवरर्षयः | | | | |
|---|---|---|---|---|---|---|---|---|
| ५८ | कौथय। | म. | ५ | आङ्गिरसः | वार्हस्पत्त्यः | भारद्वाजः | वान्दनः | मातवचसः |
| ५९ | कौथुमः | का. लौ. | ५ | ,, | ,, | ,, | ,, | ,, |
| ६० | कौशिकः | म. | ३ | वैश्वामित्रः | | आश्मरथ्यः | | वाघुलः |
| ६१ | गर्गः | का. लौ. बो. | ५ | आङ्गिरसः | वार्हस्पत्त्यः | भारद्वाजः | शैन्यः | गार्ग्यः |
| ६२ | ,, | आ. | ५ | आङ्गिरसः | वार्हस्पत्त्यः | भारद्वाजः | गार्ग्यः | शैन्यः |
| ६३ | ,, | आ. | ३ | आङ्गिरसः | | शैन्यः | | गार्ग्यः |
| ६४ | गर्दभ्यः | का. लौ. | ५ | भार्गवः | च्यावनः | आप्नवानः | आर्ष्टिषेणः | आनूपः |
| ६५ | गर्दभीमुखः | का. लौ. | ३ | काश्यपः | | आवत्सारः | | वासिष्ठः |
| ६६ | गर्दभः | म. | ३ | आङ्गिरसः | | आजमीढः | | काण्वः |
| ६७ | ,, | आ. | ३ | आङ्गिरसः | | घौरः | | काण्वः |
| ६८ | गर्दभीमुखः | का. लौ. म. | ३ | काश्यपः | | आसितः | | दैवलः |
| ६९ | ,, | का. लौ. | ३ | शाण्डिलः | | आसितः | | दैवलः |
| ७० | गविष्ठिरः | आप. बो. | ३ | आत्रेयः | | आर्चनानसः | | पौर्वातिथिः |
| ७१ | ,, | म. का. लौ. | ३ | आत्रेयः | | गविष्ठिरः | | पौर्वातिथिः |
| ७२ | ,, | आप. | ३ | आत्रेयः | | आर्चनानसः | | गविष्ठिरः |
| ७३ | गाधिनः | आप. | ३ | वैश्वामित्रः | | गाधिनः | | रैवणः |
| ७४ | गार्गीयः | म. | ३ | भार्गवः | | वैतहव्यः | | रैवसः |

| संख्याः | गोत्रर्षयः | | प्र०सं० | प्रवरर्षयः |
|---|---|---|---|---|
| ७५ | गार्ग्यः | म. | ३ | आङ्गिरसः तैत्तिरः कापिभुवः |
| ७६ | ,, | बो. | ५ | आङ्गिरसः बार्हस्पत्त्यः, भारद्वाजः शैन्यः गार्ग्यः |
| ७७ | ,, | आ. | ३ | आङ्गिरसः शैन्यः गार्ग्यः |
| ७८ | गार्त्समदः | बो. | १ | शौनकः |
| ७९ | ,, | बो. | १ | गार्त्समदः |
| ८० | गार्द्भ्यः | म. | ५ | भार्गवः च्यावनः आप्नवानः आर्ष्टिषेणः आनूपः |
| ८१ | गालवः | म. | ५ | भार्गवः च्यावनः आप्नवानः और्वः जामदग्न्यः |
| ८२ | ,, | का. लौ. | ३ | वैश्वामित्रः दैवरातः औदलः |
| ८३ | गृत्समदः | आ. | ३ | भार्गवः शौनहोत्रः गार्त्समदः |
| ८४ | ,, | लौ. का. म. | २ | भार्गवः गार्त्समदः |
| ८५ | ,, | लो. का. | १ | गार्त्समदः |
| ८६ | गोभिलः | म. | ३ | काश्यपः आसितः दैवलः |
| ८७ | गौतमः | आ. | ३ | आङ्गिरसः आयास्यः गौतमः |
| ८८ | ,, | म. | ३ | आङ्गिरसः औच (त) थ्यः औशिजः |
| ८९ | ,, | का. | ३ | आङ्गिरसः औच (त) थ्यः गोतमः |
| ९० | गौर पराशरः | बो. म. | ३ | वासिष्ठः शाक्त्यः पाराशर्यः |
| ९१ | गौरिवीतः | बो. | ३ | आत्रेयः आर्चनानसः पौर्वातिथिः |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ९२ | घृतकौशिकः | | २ | वैश्वामित्रः | कापातरसः | | | |
| ९३ | घोरः | आ. | ३ | आङ्गिरसः | घौरः | काण्वः | | |
| ९४ | चान्द्रायणः | बो. | ३ | आङ्गिरसः | | गौरुवीतः | | साङ्कृत्यः |
| ९५ | चैकः | का. लो. | ३ | वासिष्ठः | | ऐन्द्रप्रमदः | | आभरद्वसव्यः |
| ९६ | च्यवनः | म. | ५ | भार्गवः | च्यावनः | आप्नवानः | और्वः | जामदग्न्यः |
| ९७ | जमदग्नि (वत्स) | लो. का. म, | ५ | ,, | | ,, | | ,, |
| ९८ | ,, (अवत्सः) | म. | ३ | भार्गवः | | च्यावनः | | आप्नवानः |
| ९९ | जातुकर्ण्यः | म. | ३ | वासिष्ठः | | आत्रेयः | | जातूकर्ण्यः |
| १०० | जातूकर्ण्यः | बो. | १ | | वासिष्ठः | | | |
| १०१ | ,, | का: लो. | ३ | वासिष्ठः | | आत्रेयः | | जातूकर्ण्यः |
| १०२ | ,, | आप. | ३ | वासिष्ठः | | ऐन्द्रप्रमदः | | आभरद्वसव्यः |
| १०३ | जाबालः | का. लो. | ३ | वैश्वामित्रः | | देवरातः | | औदलः |
| १०४ | जाबालिः | बो. | ३ | ,, | | ,, | | ,, |
| १०५ | ,, | म. | ३ | भार्गवः | | वैतहव्यः | | रैवसः |
| १०६ | ,, | बो. | ५ | भार्गवः | च्यावनः | आप्नवानः | और्वः | जामदग्न्यः |
| १०७ | जामदग्न्यः | आप. | ५ | ,, | ,, | ,, | ,, | ,, |
| १०८ | ,, | आप. | ३ | भार्गवः | | और्वः | ,, | जामदग्न्यः |

| संख्या: | गोत्रर्षयः | | प्र०सं० | प्रवरर्षयः | | |
|---|---|---|---|---|---|---|
| १०९ | जैमिनिः | आ. | ३ | भार्गवः | वैतहव्यः | सावेदासः |
| ११० | दक्षः | का. लो. | ३ | आत्रेयः | गाविष्ठिरः | पौर्वातिथिः |
| १११ | दत्तात्रेयः | बो. | ३ | आत्रेयः | आर्चनानसः | श्यावाश्वः |
| ११२ | दार्ढच्युतः | बो. | ३ | आगस्त्यः | दार्ढ्यच्युतः | ऐध्मवाहः |
| ११३ | दालभ्यः | का. लो. | ३ | आङ्गिरसः | आम्बरीषः | यौवनाश्वः |
| ११४ | ,, | का. ल. | ३ | मान्धात्रः | आम्बरीषः | यौवनाश्वः |
| ११५ | दिवावसिष्ठः | म. | ३ | काश्यपः | आवत्सारः | वासिष्ठः |
| ११६ | दिवोदासः | म. | ३ | भार्गवः | वाध्रयश्वः | दैवोदासः |
| ११७ | दीर्घतमसः | बो. | ५ | आङ्गिरसः | औच (त) थ्यः काक्षीवतः गौतमः | दैर्घतमसः |
| ११८ | ,, | आ. | ३ | आङ्गिरसः | औच (त) थ्यः | दैर्घतमसः |
| ११९ | दैवरातः | आ. प. | ३ | वैश्वामित्रः | दैवरातः | औदलः |
| १२० | ,, | का. लो. | ३ | वैश्वामित्रः | दैवश्रवसः | दैवतरसः |
| १२१ | धनञ्जयः | आप. स. | ३ | वैश्वामित्रः | माधुच्छन्दसः | धानञ्जयः |
| १२२ | ,, | म. | ३ | वैश्वामित्रः | माधुच्छन्दसः | आघमर्षणः |
| १२३ | धन्वन्तरिः | बो. | ३ | काश्यपः | आवत्सारः | शाण्डिल्यः |
| १२४ | ,, | बो. | ३ | शाण्डिलः | आसितः | दैवलः |
| १२५ | धूम्रपाराशरः | बो. म. | ३ | वासिष्ठः | शाक्त्यः | पाराशर्यः |

| संख्या | गोत्रर्षयः | | प्र० सं० | प्रवरर्षयः | | | | |
|---|---|---|---|---|---|---|---|---|
| १२६ | निध्रुवः | बो. | ३ | काश्यपः | | आवत्सारः | | नैध्रुवः |
| १२७ | नैध्रुवः | आ. | ३ | " | | " | | " |
| १२८ | पतञ्जनः | का. लो. | ३ | आत्रेयः | | आर्चनानसः | | श्यावाश्वः |
| १२९ | पतञ्जलः | का. लो. बो. | ३ | आङ्गिरसः | | आ ( सा ) मह्वीयवः | | औरूक्षयः |
| १३० | पराशरः | आप. बो. म. | ३ | वासिष्ठः | | शाक्त्यः | | पाराशर्यः |
| १३१ | पाणिनिः | बो. | ५ | भार्गवः | च्यावनः | आप्रवानः | और्वः | जामदग्न्यः |
| १३२ | " | स. का. लो. | ३ | वैश्वामित्रः | | माधुच्छन्दसः | | धानञ्जयः |
| १३३ | " | म. | ३ | वैश्वामित्रः | | माधुच्छन्दसः | | आघमर्षणः |
| १३४ | पारणः | म. | ३ | आगस्त्यः | | पौर्णमासः | | पारणः |
| १३५ | पार्थः | बो. | ३ | भार्गवः | | वैन्यः | | पार्थः |
| १३६ | पुलस्तिः | बो. | ५ | भार्गवः | च्यावनः | आप्रवानः | और्वः | वैदः |
| १३७ | " | का. म. | ३ | आगस्त्यः | | माहेन्द्रः | | मायोभुवः |
| १३८ | पुलहः | म. | ३ | " | | " | | " |
| १३९ | पौर्णमासः | म. | ३ | आगस्त्यः | | पौर्णमासः | | पारणः |
| १४० | पौलस्तिः | लो. का. | ३ | आगस्त्यः | | माहेन्द्रः | | मायोभुवः |
| १४१ | पौलस्त्यः | म. | ३ | " | | " | | " |
| १४२ | " | म. | ३ | भार्गवः | | च्यावनः | | आप्रवानः |

| संख्या | गोत्रर्षयः | | प्र० सं० | प्रवरर्षयः | | | | |
|---|---|---|---|---|---|---|---|---|
| १४३ | पौलस्त्यः | लो. का. म. | ३ | भार्गवः | | और्वः | | जामदग्न्यः |
| १४४ | पौलहः | म. | ३ | आगस्त्यः | | माहेन्द्र | | मायोभुवः |
| १४५ | विदः | आ. | ५ | भार्गवः | च्यावन | आप्नवानः | और्वः | बैदः |
| १४६ | ,, | म. | ३ | भार्गवः | | च्यावनः | | आप्नवानः |
| १४७ | बृहदुक्थः | आ. | ३ | आङ्गिरसः | | बार्हदुक्थः | | गौतमः |
| १४८ | ,, | का. लो. | ३ | आङ्गिरसः | | बार्हदुक्थः | | वामदेवः |
| १४९ | बोधायनः | का. लौ. | ३ | वासिष्ठः | | आत्रेयः | | जातूकर्ण्यः |
| १५० | बौधायनः | बो. | ५ | भार्गवः | च्यावनः | आप्नवानः | और्वः | बैदः |
| १५१ | भरद्वाजः | का. लो. | ५ | आङ्गिरसः | बार्हस्पत्यः | भारद्वाजः | शौङ्गः | शैशिरः |
| १५२ | ,, | म. | ५ | आङ्गिरसः | बार्हस्पत्यः | भारद्वाजः | मान्त्रवरः | आत्मभुवः |
| १५३ | भरद्वाजः | बो. आप. | ३ | आङ्गिरसः | | बार्हस्पत्यः | | भारद्वाजः |
| १५४ | भरद्वाजाग्निवेश्यः | आ. | ३ | ,, | | ,, | | ,, |
| १५५ | भार्गः | म. | ५ | भार्गवः | च्यावनः | आप्नवानः | और्वः | जामदग्न्यः |
| १५६ | भारद्वाजः | म. | ५ | आङ्गिरसः | बार्हस्पत्यः | भारद्वाजः | मौद्गल्यः | शैशिरः |
| १५७ | भारद्वाजायनिः | बो. | ३ | आत्रेयः | | आर्चनानसः | | श्यावाश्वः |
| १५८ | भारद्वाजायनः | बो. | ३ | ,, | | ,, | | ,, |
| १५९ | भृगुः | लो. का. | ५ | भार्गवः | च्यावनः | आप्नवानः | और्वः | जामदग्न्यः |

| संख्या: | गोत्रर्षय: | | प्र० सं० | प्रवरर्षय: | | | |
|---|---|---|---|---|---|---|---|
| १६० | भृगवः | म. | ३ | काश्यपः | आवत्सारः | | नैध्रुवः |
| १६१ | मयोभुवः | लो. का. म. | ३ | आगस्त्यः | माहेन्द्रः | | मायोभुवः |
| १६२ | माण्डव्यः | बो. | ५ | भार्गवः च्यावनः | आप्नवानः | और्वः | जामदग्न्यः |
| १६३ | माधुच्छन्दसः | का. लो. | ३ | वैश्वामित्रः | माधुच्छन्दसः | | आजः |
| १६४ | माध्यन्दिनिः | बो. | ३ | वासिष्ठः | मैत्रावरुणः | | कौण्डिन्यः |
| १६५ | मान्धाता | आ. | ३ | मान्धात्रः | आम्वरीषः | | यौवनाश्वः |
| १६६ | ” | बो. | ३ | आङ्गिरसः | आम्वरीषः | | यौवनाश्व |
| १६७ | मान्धातुः | बो. | ३ | ” | ” | | ” |
| १६८ | मारीचः | म. | ३ | काश्यपः | आवत्सारः | | नैध्रुवः |
| १६९ | मार्कण्डेयः | बो. | ५ | भार्गवः च्यावनः | आप्नवानः | और्वः | जामदग्न्यः |
| १७० | माहुलः | | ३ | वैश्वामित्रः | साहुलः | | माहुलः |
| १७१ | माहुलिः | बो. | ३ | आत्रेयः | आर्चनानसः | | श्यावाश्वः |
| १७२ | मित्रयुः | बो. | ३ | भार्गवः | वाध्रयश्वः | | दैवोदासः |
| १७३ | मित्रावरुणः | का. लो. | ३ | वासिष्ठः | मैत्रावरुणः | | कौण्डिन्यः |
| १७४ | मुग्दलः | म. आ. | ३ | आङ्गिरसः | भार्म्यश्वः | | मौग्दल्यः |
| १७५ | ” | बो. | ३ | आत्रेयः | आर्चनानसः | | पौर्वातिथिः |
| १७६ | मैत्रेयः | का. | ३ | काश्यपः | आवत्सारः | | रैभ्यः |

| संख्या: | गोत्रर्षय: | | प्र०सं० | प्रवरर्षय: |
|---|---|---|---|---|
| १७७ | मौग्दल: | लो. का. | ३ | भार्गव: वैतहव्य: सावेदास: |
| १७८ | " | लो. का. | ३ | आङ्गिरस: भार्म्यश्च: मौग्दल्य: |
| १७९ | " | लो. का. | ३ | वासिष्ठ: मैत्रावरुण: कौण्डिन्य: |
| १८० | मौग्दल्य: | आप. | ५ | भार्गव: च्यावन: आप्नवान: और्व: जामदग्न्य: |
| १८१ | यज्ञवल्क्य: | म. | १ | वासिष्ठ: |
| १८२ | यस्क: | बो. | ३ | भार्गव: वैतहव्य: सावेदास: |
| १८३ | याज्ञवल्क्य: | का. | १ | वासिष्ठ: |
| १८४ | याज्ञवल्क्य: | आप. | ३ | वासिष्ठ: ऐन्द्रप्रमद: आभरद्वसव्य: |
| १८५ | " | आप. का. लो. बो. | ३ | वैश्वामित्र: दैवरात: औदल: |
| १८६ | यास्क: | आप. | ३ | भार्गव: वैतहव्य: सावेदास: |
| १८७ | रथीतर: | का. लो. | ३ | आङ्गिरस: वैरुप: रथीतर: |
| १८८ | " | बो. | ३ | आङ्गिरस: वैरुप: पार्षदश्व: |
| १८९ | रहूगण: | आ. | ३ | आंगिरस: राहूगण्य: गौतम: |
| १९० | रहूगण: | बो. | ३ | आंगिरस: गौतम: शारद्वन्त: |
| १९१ | रेणु: | आ. | ३ | वैश्वामित्र: गधिन: रैणव: |
| १९२ | रेभ: | का. आप. आ. | ३ | काश्यप: आवत्सार: रैभ्य: |
| १९३ | लोगाक्षि: | बो. | ३ | काश्यप: आवत्सार: वासिष्ठ: |

| संख्या: | गोत्रर्षय: | | प्र० सं० | प्रवरर्षय: | | | | |
|---|---|---|---|---|---|---|---|---|
| १९४ | लौगाक्षिः | का. लो. | ३ | काश्यपः | | आवत्सारः | | वासिष्ठः |
| १९५ | ” | का. लो. | ३ | आंगिरसः | | औच (त) थ्यः | | गौतमः |
| १९६ | वत्सः | आप. | ३ | भार्गवः | | और्वः | | जामदग्न्यः |
| १९७ | ” | आप. | ५ | भार्गवः | च्यावनः | आप्रवानः | और्वः | जामदग्न्यः |
| १९८ | वसिष्ठः | आ. म. बो. | १ | वासिष्ठः | | | | |
| १९९ | ” | म. | ३ | वासिष्ठः | | आत्रेयः | | जातूकर्ण्यः |
| २०० | वात्सायनः | आप. | ३ | भार्गवः | | और्वः | | जामदग्न्यः |
| २०१ | ” | बो. | ५ | भार्गवः | च्यावनः | आप्रवानः | और्वः | जामदग्न्यः |
| २०२ | वात्स्यः | बो. | ५ | ” | ” | ” | ” | ” |
| २०३ | ” | का. लो. | ३ | भार्गवः | | च्यावनः | | आप्रवानः |
| २०४ | ” | का. लो. | ३ | आंगिरसः | | आम्बरीषः | | यौवनाश्वः |
| २०५ | ” | लो. का. | ३ | मान्धात्रः | | आम्बरीषः | | यौवनाश्वः |
| २०६ | ” | का. | ३ | काश्यपः | | आवत्सारः | | नैध्रुवः |
| २०७ | वात्स्यायनः | म. | ३ | ” | | ” | | ” |
| २०८ | ” | बो. | ५ | भार्गवः | च्यावनः | आप्रवानः | और्वः | जामदग्न्यः |
| २०९ | ” | बो. | ३ | काश्यपः | | आवत्सारः | | शाण्डिल्यः |
| २१० | ” | बो. | ३ | काश्यपः | | आवत्सारः | | दैवलः |

| संख्या: | गोत्रर्षयः | | प्र० सं० | प्रवरर्षयः | | | | |
|---|---|---|---|---|---|---|---|---|
| २११ | वात्स्यायनः | बो. | ३ | काश्यपः | | आवत्सारः | | आसितः |
| २१२ | ” | बो. | ३ | शाण्डिल्यः | | आसितः | | दैवलः |
| २१३ | वाध्र्यश्वः | आप. | १ | वाध्र्यश्वः | | | | |
| २१४ | ” | आ. | ३ | भार्गवः | | वाध्र्यश्वः | | दैवोदासः |
| २१५ | वाधूलः | बो. | ३ | भार्गवः | | वैतहव्यः | | सावेदासः |
| २१६ | वामदेवः | आप. | ३ | आंगिरसः | | वामदेवः | | बार्हदुक्थः |
| २१७ | वालखिल्यः | आप. | ३ | वैश्वामित्रः | | दैवरातः | | औदलः |
| २१८ | वाल्मीकिः | बो. | ३ | भार्गवः | च्यावनः | आप्नवानः | और्वः | जामदग्न्यः |
| २१९ | वासिष्ठः | बो. | ५ | वासिष्ठः | | | | |
| २२० | ” | आप. | १ | वासिष्ठः | | ऐन्द्रप्रमदः | | आभरद्वसव्यः |
| २२१ | विदः | बो. | ३ | भार्गवः | च्यावनः | आप्नवानः | और्वः | वैदः |
| २२२ | ” | लो. का. | ५ | भार्गवः | | और्वः | | जामदग्न्यः |
| २२३ | विश्वामित्रः | का. लो. | ३ | वैश्वामित्रः | | दैवरातः | | औदलः |
| २२४ | ” | बो. | ३ | वैश्वामित्रः | | माधुच्छन्दसः | | आजः |
| २२५ | ” | का. | ३ | वैश्वामित्रः | | आश्मरथ्यः | | वाधुलः |
| २२६ | विष्णुवृद्धः | म. आ. | ३ | आङ्गिरसः | | पौरुकुत्सः | | त्रासदस्यवः |
| २२७ | ” | का. लो. | ३ | आङ्गिरसः | | पार्षदश्वः | | राथीतरः |

| संख्या | गोत्रर्षयः | | प्र०स० | प्रवरर्षयः | | | |
|---|---|---|---|---|---|---|---|
| २२८ | वीतहव्यः | आष. | ३ | भार्गवः | | वैतहव्यः | सावेदासः |
| २२९ | ,, | म. | ५ | भार्गवः | च्यावनः | आप्नवानः और्वः | जामदग्न्यः |
| २३० | वेणुः | आ. | ३ | वैश्वामित्रः | | गाधिनः | वैणवः |
| २३१ | वैन्यः | बो. | ३ | भार्गवः | | वैन्यः | पार्थः |
| २३२ | वैरूपः | बो. | ३ | आङ्गिरसः | | वैरूपः | राथीतरः |
| २३३ | ,, | बो. | ३ | आंङ्गिरसः | | पार्षदश्वः | वैरूपः |
| २३४ | ,, | आप. | ३ | आष्टादंष्ट्रः | | पार्षदश्वः | वैरूपः |
| २३५ | शक्तिः | का. लो. | ३ | आङ्गिरसः | | आ (सा) महीयवः | औरुक्षयः |
| २३६ | ,, | आ. | ३ | शाक्त्यः | | गौरुवीतः | सांकृत्यः |
| २३७ | शाण्डिलः | बो. | ३ | काश्यपः | | आवत्सारः | शाण्डिल्यः |
| २३८ | ,, | बो. | ३ | काश्यपः | | आवत्सारः | दैवलः |
| २३९ | ,, | बो. | ३ | काश्यपः | | आवत्सारः | आसितः |
| २४० | ,, | आ. | ३ | काश्यपः | | आसितः | दैवलः |
| २४१ | ,, | आ. बो. | ३ | शाण्डिल्यः | | आसितः | दैवलः |
| २४२ | शरद्वन्तः | बो. | ३ | आङ्गिरसः | | गौतमः | शारद्वन्तः |
| २४३ | ,, | बो. का. | ३ | काश्यपः | | आवत्सारः | वासिष्ठः |
| २४४ | ,, | बो. | ३ | काश्यपः | | आवत्सारः | आसितः |

| संख्या | गोत्रर्षयः | | प्र० स० | प्रवरर्षयः | | | | |
|---|---|---|---|---|---|---|---|---|
| २४५ | शाक्त्यः | आ. | ३ | शाक्त्यः | | गौरूवीतः | | सांकृत्यः |
| २४६ | शाण्डिल्यः | आप. म. | ३ | काश्यपः | | आसितः | | दैवलः |
| २४७ | ,, | आप. | २ | आसित दैवलः | | | | |
| २४८ | शाण्डिलिः | म. | १ | | | वासिष्ठः | | |
| २४९ | शिशिरः | बो. | ३ | वैश्वामित्रः | | कात्यः | | आक्षीलः |
| २५० | शुङ्गशैशिरः | आप. | ५ | आङ्गिरसः | वार्हस्पत्यः | भारद्वाजः | कात्यः | आक्षीलः |
| २५१ | शुनकः | बो. आप. | १ | | | गार्त्समदः | | |
| २५२ | ,, | आ. | ३ | भार्गवः | | शौनहोत्रः | | गार्त्समदः |
| २५३ | ,, | बो. | १ | | | शौनकः | | |
| २५४ | शृङ्गः | बो. | ३ | आङ्गिरसः | | वार्हस्पत्यः | | भारद्वाजः |
| २५५ | शैशिरः | का. लो. | ५ | आङ्गिरसः | वार्हस्पत्यः | भारद्वाजः | शौङ्गः | शैशिरः |
| २५६ | ,, | म. | ३ | काश्यपः | | आवत्सारः | | वासिष्ठः |
| २५७ | श्यामपराशरः | बो. म. | ३ | वासिष्ठः | | शाक्त्यः | | पाराशर्यः |
| २५८ | श्वेतपराशरः | बो. म. | ३ | ,, | | ,, | | ,, |
| २५९ | सङ्कृतिः | का. लो. बो. | ३ | आङ्गिरसः | | सांकृत्यः | | गौरुवीतः |
| २६० | साङ्कृत्यः | लो. का. | ५ | भार्गवः | च्यावनः | आप्नवानः | और्वः | जामदग्न्यः |
| २६१ | सावर्णिः | बो. | ५ | ,, | ,, | ,, | ,, | ,, |

| संख्या | गोत्रर्षयः | | प्र०सं० | प्रवरर्षयः | | |
|---|---|---|---|---|---|---|
| २६२ | सावर्णिः | आ. | ३ | भार्गवः | वैतहव्यः | सावेदासः |
| २६३ | साहुलः | | ३ | वैश्वामित्रः | साहुलः | माहुलः |
| २६४ | सुवर्णरेतसः | | २ | वैश्वामित्रः | कापातरसः | |
| २६५ | सोमवाहः | बो. आप. | ३ | आगस्त्यः | दार्ढ्यच्युतः | सौमवाहः |
| २६६ | सोमराजकः | आ. | ३ | आङ्गिरसः | सौमराजः | गौतमः |
| २६७ | हरितः | बो. | ३ | आङ्गिरसः | आम्बरीषः | यौवनाश्वः |
| २६८ | ,, | आ. | ३ | मान्धात्रः | आम्बरीषः | यौवनाश्वः |
| २६९ | ,, | बो. | १ | | वासिष्ठः | |
| २७० | हरितयः | का. बो. | १ | | ,, | |
| २७१ | हरितयः | बो. | ३ | काश्यपः | आवत्सारः | नैध्रुवः |
| २७२ | हिरण्यः | म. | ३ | आत्रेयः | आर्चनानसः | गाविष्ठिरः |
| २७३ | ,, | का. | ३ | आत्रेयः | गाविष्ठिरः | पौर्वातिथिः |
| २७४ | हिरण्यरेतसः | | २ | वैश्वामित्रः | हैरण्यरेतसः | |
| २७५ | होता | बो. | २ | काश्यपः | आवत्सारः | नैध्रुवः |

